तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात्।
तस्मादनित्या एवेति वर्णाः सर्वे मतं हि नः॥१६८॥

इति श्रीविश्वनाथपञ्चाननकृता कारिकावली समाप्ता॥

प्रत्यभिज्ञा कुत्र दृष्टेत्यत आह—तदेवेति। यदौषधं मया कृतं तदौषधमन्येनापि कृतमित्यादिदर्शनादिति भावः॥ १६८॥

इति श्रीमहामहोपाध्यायविद्यानिवासभट्टाचार्यपुत्र
श्रीयुतविश्वनाथपञ्चाननभट्टाचार्यविरचितायां
सिद्धान्तमुक्तावल्यां गुणनिरूपणम्॥
समाप्तश्चायं ग्रन्थः॥

दिनकरी।

स्वीकारात्। तादृशनियमे मानाभावे तु मास्तु तेषां कारणत्वं भेरीदण्डसंयोगादिनिमित्तकारणसहकृतेनाकाशेनैव शब्दोत्पत्तिसंभवादिति। प्रथमादिशब्दानां च स्वकार्यशब्देनैव नाशः चरमस्य तूपान्त्यशब्देनोपान्त्यशब्दनाशेन वा नाश इति॥ १६७॥ मूले तदेवौषधमित्यादिना सैवेयं दीपकलिकेत्यादेः परिग्रहः। ननु तत्रापि व्यक्त्यभेद एव विषयोऽस्त्वतो भावार्थं प्रकाशयति—यदौषधं मया कृतमित्यादिना। अत्रच स्वकर्तृकत्वस्वभिन्नकर्तृकत्वरूपविरुद्धधर्माध्यासाहितभेदप्रत्ययस्य प्रतिबन्धकस्य सत्त्वान्न व्यक्त्यभेदो विषयः किंतु तत्सजातीयाभेदो विषय इति भावः॥ १६८॥

भानुं प्रणम्य परिभाव्य च शास्त्रसारं
मुक्तावलीकिरण एष पितृप्रदिष्टः।
सद्युक्तिभिर्दिनकरेण करेण सोऽयं
नीतः प्रकाशपदवीं सुधियां मुदेऽस्तु॥
मुक्तावलीप्रकाशो यः स्वाज्ञानतिमिरापहः।
तेन सन्तोषमायातु नीलकण्ठः सतीप्रियः॥

इति श्रीभारद्वाजकुलाम्बुधिपूर्णचन्द्रबालकृष्णभट्टात्मज-
महादेवभट्टतनूजश्रीमद्दिनकरभट्टविरचिते न्याय-
सिद्धान्तमुक्तावलीप्रकाशे गुणनिरूपणम्॥
समाप्तश्चायं ग्रन्थः॥